# गैर्वाणीगौरवग्रन्थमाला

सप्तमं सुमम्

●

संपादकौ

गयाचरण त्रिपाठी

माया मालवीया

॥ श्रीः ॥

# ॥ मृत्कूटम् ॥

[मानवशतकम्]

रचयिता

डॉ० भास्कराचार्य त्रिपाठी

भोपालस्थायाः

मध्यप्रदेशसंस्कृताकादेम्याः

सचिवः

आवाससङ्केतः - एफ़ 44/6 दक्षिणतात्या-

टोपेनगरम् , भोपालम् - 462003

श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आजाद पार्क

प्रयागः

१९९२

# FOREWORD

The lovers of modern Sanskrit poetry will be highly delighted to ramble through this small Kāvya which is a worthy addition to the long series of *Śataka-kāvyas* existing in Sanskrit. The *Mṛtkūṭam* i.e. 'Heap of Earth' (or better still : 'a handful of dust' ) is a medium-length poem describring the various vicissitudes of human life, its full course beginning with embryonic stage till its final end when it merges back into the Earth from where it has emanated testifying the Biblical saying : 'Dust though art, to dust returnest.' The poet has divided the circle of human life into ten phases and has devoted uniformly 10 verses to each of these stages, thus completing a century of *Sragdharā* verses. He beautifully describes aspirations and ambitions, dreams and imaginations, struggles and fights, frustrations and achievements of each of these stages.

The poet is fully embedded in the ancient classical tradition of Sanskrit poetry, yet he is unmistakingly a poet of the end of 20th century. Much of his imagery and many of his similes are entirely new and they not only impart a fresh look and lend a novel and modern character to the Kāvya but are also responsible for the invigorating fresh air that it breathes. It is amazing how new ideas and new sentiments can be expressed with the help of pictures and images based on age-old Sanskrit words. The novelty of approach and the novelty of expression is absolutely smashing and one wonders how such an ancient idiom can be brought to express the most modern of ideas in a most modern manner !

Another feature which strikes the reader immediately upon going through the Kāvya, is the exceptional command of the Poet on the Sanskrit language and his special mode of expression as well as his unique way of putting across his point with the help of subtle and fine allegories. Everyone would concede that a life-time of variegated experience of human character and behaviour as well as years of patient labour go into the making of such a perfect and well chiselled-out piece of literature.

Dr. Bhaskaracārya Tripathi is presently running the Sanskrit Academy of Madhya Pradesh smoothly and efficiently as its Secretary. He is fortunate to have been born in the family of traditional Sanskrit scholars at the village Pāṇḍar of Allahabad Distt. in the year 1942. After finishing his studies at the Allahabad University, he served on the staff of a number of Post-graduate colleges in M. P. He is also the famous editor of *'Dūrvā'*, the Sanskrit quarterly magazine of the Academy. He has been publishing smaller poems in Sanskrit magazines and participating in Sanskrit poetical meets, but this is, perhaps, his first major published work. However this attempt itself is marked with a very high dagree of poetic sensitivity and a rare grandeur. The Hindi translation, on the contrary, is distinguished by its simplicity and 'folk-touch'.

I hope, the Sahṛdayas will enjoy the Kāvya and appreciate the efforts of a Sanskrit poet to produce something absolutely new and original, not only with regard to the theme but also in respect of expression.

Allahabad
25 3-92

**Gaya C. Tripathi**
**Maya Malaviya**
*Editors.*

# नवद्वारम्

समजनि मनसो व्रतं मञ्जुलं संस्कृतं यत्नतः शीलयन् संस्मरन् संश्रयन् जीवितं स्पन्दये संस्कृतिं छन्दये शाब्दिकी सारणी स्यादसाधारणी व्यञ्जये नूतनां रागसंवेदनां किन्तु शब्दार्थयोः सुप्तिङां सार्थयोः क्लिष्ट-वाग् व्याकृतेः काकुभाग्व्याहृतेः पुष्कलच्छन्दसां विस्फुरद्रंहसां नास्ति मे वैदुषीरञ्जिता शेमुषी ।

इति च शरणवत्सलं नीरदश्यामलं दण्डकाशर्मदं भिल्लिकानर्मदं वीजितं बन्धुना यातुनिर्जिष्णुना सेवितं क्ष्माभुवा किञ्च वात्याभुवा देव-मायोघ्यकं रोदसीनायकं श्लोकलीलाद्रुतः प्रार्थये प्रश्रितः शस्यमालाचले चित्रकूटाञ्चले तीर्थराजात्मके पाण्डरग्रामके लब्धजीवाङ्कुरः शिक्षकः किङ्करः । अनवरतमता अमी चेतनायाः शमी-वल्लरीं धुन्वते स्नेहमातन्वते चिन्तिताः स्वर्गता आत्मनो देवता वप्तृतातः स रामो गुलामाक्षरालङ्कृतः शत्रुजिद् भैरवस्तोत्रकृद् जन्मदो ज्योतिषां व्योम्नि वेल्लत्त्विषां कोविदो रामवत् सुप्रियः प्राणवद् यश्चतुर्वेदिनां विश्रुतो ज्ञानिनां सद्गुरुः सम्मतः सोऽपि सारस्वतः ।

जनयति जननी स्वतां राजिमत्-सुस्मितां क्लेशवर्षं सदा संविदाना मुदा सङ्गिनी वल्लभा नित्यराकाप्रभा कल्यतन्द्रा हि सा जाग्रिया चापि सा का न वा सद्यशा अन्नपूर्णा स्वसा स्निग्धबन्धुद्वयी सोमसूर्यद्वयी बाल्यतः काव्यकृत् सूनृतः सर्वजित् कामरूपाङ्कितोऽयं निलिम्पः सुतो बान्धवी च प्रजा तुल्यशीलव्रजा ।

निखिलभुवनचत्वरे नित्यशः सृत्वरे व्योम्नि पृथ्वीतले सागराणां जले निःश्वसन्तः श्वसन्तः समेऽहर्निशं प्राणिनां संग्रहाः स्वैरसंख्यास्पृहाः सन्त्यमी

गर्भजा अण्डजाः स्वेदजा उद्भिदः केऽपि वा स्पन्दमाना ध्रुवाः किन्तु निःसंशयं श्रीवरीयानयं तेषु सर्वङ्कषो मेधयाऽभ्रङ्कषो वर्त्तते मानवः प्राप्तविद्यालवः ।

दरकुतुकितचेतसा प्रेरितोऽनेहसा पार्श्वलोकस्थितिं वन्धुरावस्थितिं वीक्षमाणो मनाक् प्रायशो रुद्धवाक् तेन तूर्णोऽभवं वेदितुं मानवं गर्भनिष्ठं पुरा रोचिषा विस्फुरा बाल्यकौमारयोर्मेदुरं कालयोर्यौवने सज्वरं वार्द्धके जर्जरं क्षेत्रलीनं सदाऽनन्तरश्चाविदा म्लानगात्रं स्वयं मृत्तिकासंश्रयम् ।

कवनवलितकश्मलं चक्रिरे निर्मलं नित्यचेतोगताः पूजिता देवताः किञ्च शास्त्रश्रियः प्राक्तनाः सूरयः क्षिप्रया सद्व्रती ज्ञानसाह्वः कृती चन्द्रभानुर्मतः स प्रयागस्थितः काश्यपः सत्कविः काशिकासच्छविः कोऽपि खिस्तेवरः सिद्धमन्त्राक्षरः श्रीनिवासः सुहृद् भारतीकोषभृद् राधिकावल्लभः सागरोद्यत्प्रभः ।

सहृदयकमलेशदत्तस्य रागोऽवदत् कम्प्रचेष्टायुतः स्तोकबाष्पप्लुतः कल्पनाविष्कृतिं व्यञ्जनाऽलङ्कृतिं कोऽपि मेने गुणीभूतसत्तां गुणी व्यङ्ग्यतः सङ्गतां काव्यवीथीगतां वाजपेयी जयी संस्कृतेः सञ्चयी यात्वशोकः कथं नैव संज्ञापथं चण्डिकायाः प्रसादश्च भास्वद्यशा माधुरीमञ्जसा दर्शयन्नाशिषा ।

त्रिदशसरित उत्तमे यामुने सङ्गमे श्यामसंवीजिते लोकनीराजिते ज्ञानविद्युद्घने तीर्थके पावने वाङ्निकुञ्जायते शोधकेन्द्रायते संस्कृतद्योतकं राष्ट्रियं पीठकं ग्रन्थमाला नवा यस्य चारुश्रवा राति सप्रश्रयं क्रोडकोणाश्रयं तूलिका तर्पिता ब्रह्मणे चार्पिता कोऽपरः संविधिः स्यान्मुदां शेवधिः ।

—भास्कराचार्यस्य

# अवतरणिका

अवस्थी बच्चूलालः

लोकानां वृत्तमभिव्याप्यातिक्रम्य च कोऽप्यलोको राजते यस्य चतुर्थांशे लोकानां स्थितिः। लोकाश्च प्रतिब्रह्माण्डं व्यवतिष्ठन्ते। ब्रह्माण्डानां नास्ति संख्येति न वेदा एव किन्तु साम्प्रतिका विज्ञानविदोऽपि ब्रूयुः। तेषु किलास्माकं ब्रह्माण्डपिण्डं सिद्धार्थं इव जातु दृश्येत। तस्य घटकीभूतेषु ग्रहपुञ्जेष्वपरिसंख्यातेषु भूरियं कामपि क्षुद्रतामनिर्वचनीयामेव गाहते। सा चेयमकिंचनेव भूः स्वब्रह्माण्डोपरिष्टाददृश्यैव भवेदिति प्रतीयते। अस्यां च कियान् भागो मनुष्यवसतिः स्यात्। तत्रापि का गणनैकस्य मृत्कूटस्य ?

पृथिव्या उत्करनिकरप्रख्ये सप्तधातुकृत-संघाते गगनदत्तावकाशे प्राणपञ्चकसञ्चिते भोगविपाकाय लब्धपरिपाके नीरसेकार्द्रीकृतान्तर्भंगे नामास्मिन् नामरूपव्याकृतमृत्कूटे वास्तव्यः सुकृतमानी न स्वकृतानि दुष्कृतानि क्षणं स्मरति, प्रत्युत, ब्रह्माण्डमेव पिण्डमेनद् मन्यमानस्तत्र तेन तथा विहरति यथा कालजयी परमेश्वर इति क्षणशो गच्छन्तं कालं न कलयति, आमघटमेनं विशीर्यमाणं नालोकयति, भुव आकर्षणशक्त्या स्वाभिमुखमाकृष्यमाणं कवलीकर्तुमेव वलीपलितादिभिर्निपात्यमानं न चेतयते। किं बहुना, अनित्ये नित्यत्वम्, अशुचौ शुचित्वं, दुःखे सुखत्वम् अनात्मनि चात्मत्वमध्यस्य देहारामो भवति। नोपास्ते गुरून्, नार्चयति देवान्, न मानयति शास्त्रं, न च पश्यति क्षणे क्षणे षड् भावविकारान् गृह्णानानि भूतानि सदा जायमानान्येव विनश्यदवस्थानि, हन्तोपास्ते लम्पटान्, अर्चयति कामकरण्डान्, मानयति पाखण्डं पापखण्डम्, पश्यति च स्वताऽऽहिताभिनिवेशाकुलतातारतम्योपहित-हितानि वस्तूकृत्यावस्तूनि पाशितोऽपि स्वादुङ्कारं

भुञ्जानः कूटोपस्करकीर्णाः कतिपया धानाः। तथा च विववार कविभास्कराचार्यः—

**निध्यायत्येष दृश्यं सपदि चिरतरं धीरमार्जारवृत्ती**
**रक्तोऽप्यास्ते च तूष्णीं बक इव पयसि न्यस्तनेत्रः किशोरः,**
**यद् वै कश्छद्मभोजी भयमभिनयते प्रोञ्छ्य पुच्छेन वक्त्रं**
**केयं निर्धूय शल्कं प्रसरति शफरी पल्वलाम्भः प्रलुब्धा। २४**

इतीयं नाम विडम्वना जीवस्य, जीवनाय कृतसंकल्पस्य, दुःखसाधनानि द्विषतः, सुखसाधनानि सरागं लोलुपतः सतृष्णं वा पश्यतः, अस्मितया प्रतारितस्य, "मा न भूवं भूयासम्" इत्यभिनिवेशेन भृशं प्रसारितनयनस्य, अविद्यारथ्यायायिनो विरथस्य कथंकथया वितथायमानक्षणस्य। सोऽयं क्वचिदङ्गनापाङ्गमार्गणैः सुखाक्रियते, क्वचित्खलदुरुक्तगदाभिर्दुःखाक्रियते, क्वचिच्छोक-तन्दुरे शूलाक्रियते, क्वचिच्चाशनवासोवासचिन्तोन्दुरुसहस्रैः समूलकर्तं कृत्यते किन्तु जीवत्येव प्राणवात्याचक्रान्दोलितस्नायुसंस्थानो दोलारूढागारमिव कलेवरं भजमानस्तपस्वी। अथापि कापि कमनीयता तरुणिम्नः—

**नेत्रद्वन्द्वे कुरङ्गः शिरसि कलभको जल्पितेऽयं कलापी**
**पश्चास्यः प्रोन्नतांसे स्फिचि वरजघने स्फायमानोऽथ खड्गी,**
**दोष्णोः किञ्च प्रपातप्रगुणितलहरी राजते निर्झरिण्या**
**यूनो गात्रच्छलेन प्रविशति नगरीं जङ्गमा जङ्गलश्रीः। ३४**

भास्करस्येव भास्कराचार्यकवेर्भासो भासयन्ति मृत्कूटस्य तादृशं स्वरूपं यत्र मार्तिकस्येव पात्रस्य बालाकारः सन्धिरपि पारोक्ष्यं दवयति कवयितुश्च प्रतिभां पुरतः स्फुरन्तीं नूतनयति। तथा हि क्षणेन कथं तरुणी भवंस्तरुणीं परिणीय गृही जायते—

**एकाकिन्या भ्रुवाऽयं वरयति तरुणो भाविनीमङ्कलक्ष्मी-**
**मेकस्मात् कम्प्रशब्दाद् भवति च विजितो निष्प्रतीकार एव,**
**एकान्तस्वप्नशीलः प्रथमयुगलिकाकौतुकाकृष्टचेता**
**एकस्मिन् ग्राम्यगीते गतिमयचरणो जायतेऽसौ गृहस्थः। ४१**

यथा यथा कूटोऽयं कालेन दशाया दशान्तरं नीयते तथा तथा कर्माशयात् कर्माशयमर्जयति, भोगेन यावत् क्षिणोति ततो भूयसा संचिनोति, यावद् वृणुते ततोऽधिकतरमपवृङ्क्ते पुण्यराशिम्। जन्मानन्तरमस्तिभावं विभाव्य वर्धमानो विपरिणमति, विपरिणमँश्च क्षणशः क्षीयमाणं न पश्यति नश्यदवस्थमात्मानम्। इतः खल्वप्यधिकं कवयति भास्कराचार्यः—

गात्रोष्मा स्निग्धगन्धो हरति धृतिचयं यौषितोऽमुष्य कश्चित्
कम्रो झंकाररावः स्फुरित इव वने स्फीतकर्णस्य रङ्क्नोः,
तेनाकृष्टः स रागी विसृजति बहुशो लोचनद्वन्द्वमीलां
क्वाधीतिः क्वाप्तसेवा स्मरणमपि कुतो नित्यनैमित्तिकानाम्। ४४

हा हन्त! नित्यानि कर्माणि विस्मर्यन्तां नाम, नित्याः खलु परीवर्ता घटमाना न मानयन्त्यस्य मनोरथान्। नैमित्तिका अपि नियतिचक्रचङ्क्रमणप्रभवाः परिभवा व्यवसायाभावोद्घाता घातयन्ति सङ्कटे पथि क्षणिकानपि प्रमोदान् मनसिजकण्डूजन्मनः। जीवनं विडम्बयन्नसौ स्तम्बेरमकलभक इव जम्बाले महाग्राहग्रस्तः कां कां नावगाहते दुरवस्थाम्—

पत्राशा प्रातराशः परिचितसुहृदां सङ्कुलाभश्च भोज्यं
स्नानं यानस्य धूली श्रमजलरचना रेखिता चन्दनश्रीः,
शय्या कुब्जस्य शावो नयनपुटकयोर्व्याजमीलैव निद्रा
सञ्जाता विप्रवासे नियतिपरवशा भृत्य-दैनन्दिनीयम्। ५४

पतन्तं त्रायेतेति तदाशावद्धनाडीबन्धः कथमपि प्राणान् धारयन् पिपतिषुरपि जिजीविषाभिशापधृतश्वासो भस्त्रेव ध्रियते जाठरानलकीलां चोत्तेजयति। तथैव च दिनचर्याग्रे विवृता—

प्रातः कालेऽतिवेलं परिहृतशयनो नेत्रतापेन खिन्नः
कामं मध्याह्नकाले प्रभुपरिचरणैः शीर्षतापं प्रपन्नः,
सायं सालावृकाणां व्रजति विवशतां गात्रतापावसन्नः
शर्वर्यां जागराभिः श्वसिति च भृतकोऽनेकवारं विपन्नः। ६५

तरुणिम-वारुणी-समर्पितोऽरुणिमा किल यावत् केली-कलां कलयति ताव-देवास्य वृत्तिकृता वृत्तकृता वा चिन्ता सन्तायते। वृत्तहानेन चात्मनं मूर्तिधरं मदनमेव मनुते। अर्थकरीं वृत्ति कामाय निमित्तभूतां स्वीकृत्य दिनं यथा वा तथा वा व्यतियाप्य विभावर्यां भावप्रवणचेताः स्वालयमधिगत्य खेलति। अर्धवयाः खल्वसौ कालचपेटापातेन पतितदन्तः, खडिकालेपेनेव पराजय-मनुभावयद्भिः केशैः सितिम्ना विदूषितः कामपि दशां लभते—

का चेमे कर्मनाशा मुखबिलकलना यत्कृता दन्तपातैः
पूर्वं पीयूषपुष्टा रदपटपटली धन्वलीलां वितेने,
माद्यद्भृङ्गालिनीला चिकुररुचिकला शुक्लिमानं जगाहे
राकादर्शं च रूपं सपदि मलिनतां शिश्रिये दर्शकल्पाम्। ७३

अहो शब्दार्थयोजना, शब्दब्रह्मणो निसर्गसिद्धिरौत्पत्तिकी च प्रतिभानशक्ति-र्भास्कराचार्यस्य। अग्रे कविनानेन प्रौढस्य मृत्कूटस्य वर्णना प्रसरं नीता। तत्र प्रत्यग्रता मोदयति मनः सहृदयस्य—

नो शुष्यत्पत्त्रराजी जनयति परितः सुप्रसारं समीरं
म्लानो वह्निर्न तापं कलयति जलदो नाश्विने बिन्दुपातम्,
न श्वभ्रं संविदध्यात् प्रहरशतचला शर्वला कुण्ठिताग्रा
नुन्नायुर्ना च नूनं नवलविलसनं नैव नेयो निनङ्क्षुः। ७८

एवंभूतेषु स्थलेषु शब्दमैत्री समर्थार्थगाम्भीर्यं शारदी राका शेफाली-सौरभ-मिवानुधावन्ती कमप्यपूर्वं सौष्ठवसंभारं बिभर्ति। अर्थगाम्भीर्यं खलु चित्तावर्जकं प्रत्यग्रं नवमालिकासौरभमिव स्वोपस्थित्यैव स्नायुजालं वेल्लयति सुमनसां काव्यकौमुदीचकोराणाम्। पराचीने चषके परिवेषिता पुराणी वारुणी न किं गन्धभरेणैव मदयति, न किमभिनवामेत्र प्रतिचुषत्कारं घूर्णिकां कलयति, मन्ये नवीनेनावदंशेन मत्तकाशिन्या दत्तेन सर्वं नवतां नयति। कल्पनैवेह सुन्दरी, यस्याः सुकुमार-पाणिपल्लवेनेव शब्दार्थविन्यासेन प्रतिपदं रसभरधुरीणं स्मितमुन्मीलयति। तथा हि—

सुप्तः सम्राडुत श्वा भवति समरुचिः स्रस्तनिःशेषगात्रः
शश्वद् विस्फारशीलां श्वसितगुणनिकावैकृतीं सन्दधानः,
एकः स्वप्नायमानो विमृशति यदहं श्वा भवेयं कदाचित्
काङ्क्षत्यन्यो भविष्ये जनुषि नरपतिः क्वापि भूयासमेव । ९०

कस्कोऽत्र संशयः मनोरथानां हि सर्वत्र गतिः स्वप्नानां च। जागरितोऽपि मृत्कूटः परस्वहरणाय कुक्कुरायते, नाथवत्सु लोकनाथायते, बालासु तरुणिम-महिमानं लोकं लोकं रासभायते, आत्मानमपेक्ष्योच्चैः पदमारूढवतां पुरो वैतालिकायते, सुहृत्सु दौर्हृदमाचरन् दन्दशूकायते क्वचिदभक्ष्यं भक्षयन् विड्वराहायते, गेहे शूरायते च वनितासु, किन्तु जीर्णे वयसि तत्सर्वं मृषायते—

ज्ञानं प्राज्याभिमानं भजति भिदुरतां सन्धिभिः कीकसानां
कोषस्थं स्वापतेयं व्रजति ननु समं श्लेष्मभिर्नालिकासु,
सम्पन्ना मित्रमाला त्यजति परिचयं कृच्छ्रनिःश्वासकम्पैः
कालोऽयं क्विप्-चरित्रो यजति न किमरे विश्वजित्सत्रमेव । ९२

भास्कराचार्यो भवेदन्यो वा कश्चित् कवित्वावच्छेदेन नासौ पदात् पदमपि सारयितुं प्रभवति, ऋते सारस्वतादेशादेशात् । अत्रैव हि कवेः परिचयो भवति, यदसौ लोकाल्लोकोत्तरं समारुह्य काव्यार्थमनुभवति, स्वान्ते मूर्तयित्वा वर्णमालां योजयति—शब्दैरनुवदति । प्रक्रियेयं क्वचिद् दृश्यत्वं क्वचिच्चादृश्यतां वहति । यत्र दृश्या तत्र सर्वजनसाधारणोऽनुभवः परिदृश्यते, शब्दसमाधिरर्थसमाधिर्वा मनो विलापयति । तथा हि—

दुग्धाब्धिः कृत्स्नगेहे विलुलितमधुरा दुग्धधारा मुखाब्जे
मुग्धाभिर्गीयमानं स्वरगृहमभितो मङ्गलं दुग्धगन्धि,
दन्ताली दुग्धमुग्धा कलितकिलकिला दुग्धसौख्यानि दुग्धे
मृत्कूटे दुग्धरागं भजति वसुमती स्नप्यते दुग्धपूरैः । ११

अत्र दुग्धपदस्य लाटयोजना लाटवनितेव कामप्यभिख्यां वितरति, सरति च हृदयतन्त्रीषु संस्पर्श इव सुकुमारमन्दगतिकाभिरङ्गुलीभिः प्रियया वितीर्णः

प्रकिरति शरदि शेफालीव सुमनोजन्मभूमिं सुमनोभिर्दिक्षु प्रसारयन्ती सौरभं रभसम्। अन्यार्थसमाधेः काप्येकैव गुणनिका गुणिभ्यः प्रगुणीकृता प्रस्तूयते—

साक्षादग्रेऽवतीर्णो यदि नवयुवकं राजराजोऽनुयुङ्क्ते
किन्ते प्रेयो नितान्तं वद भयरहितो यौवनं वा धनं वा,
तत्तूर्णं सोऽभिवध्यात् प्रथमचयनिका रोचते नाथ मह्यं
यत्ते वस्तु द्वितीयं तदु निजवसतौ किन्नरेभ्यः प्रदेयाः। ३८

इह किन्नरो जातिविशेषोऽपि क्लीबप्रायः कुत्साभाजनतां गतो नरोऽपि यः खलु वनितामभिमुखी भूतामपि अनाक्रम्य लङ्घयति, तस्य धनेनैव तोषः स्यादिति। यूनः खलु धनस्य भूमा वितृष्णतामेव तनुयात् तनुयातनामेव वा दद्यात् प्रियापाङ्गविक्षेपविरहितस्य। अतः स्वल्पीय एव स्वापतेयं कामविभूतये पर्याप्नोति—

शीते स्वल्पा दिनश्रीः सुखयति जगतीं ग्रीष्मके स्वल्परात्रिः
स्वल्पीयः शब्दतन्त्रं वहति जनरुचिं प्राज्यमुद्वेजनाय,
रागः क्रीडा विहारो मदिरविलसितं प्रार्थना भोजनं वा
यत् स्वल्पं तत् सुमिष्टं यदपि बहुतरं तन्न मिष्टं विभाति। ६७

तथा चैवं भूयात्—

भूगोलं परिवीय भावितमतिश्रीभास्करोद्भासिता
रोहन्ती प्रतिपर्वं सर्वसरणीनैपुण्यपुण्यैकभाक्,
गङ्गाया अतटे तटे च विसरत्काण्डप्ररोहा नवा
दूर्वेव प्रतिभाप्रभा नवनवोन्मेषा विराराज्यताम्।

●●

# पुराकल्पः


| | श्लोकसंख्या | पृष्ठम् |
|---|---|---|
| ☐ भ्रूणः | [ १–१० ] | १ |
| ☐ शिशुः | [ ११–२० ] | ६ |
| ☐ किशोरः | [ २१–३० ] | ११ |
| ☐ तरुणः | [ ३१–४० ] | १६ |
| ☐ गृहस्थः | [ ४१–५० ] | २१ |
| ☐ प्रवासी | [ ५१–६० ] | २६ |
| ☐ भृतकः | [ ६१–७० ] | ३१ |
| ☐ प्रौढः | [ ७१–८० ] | ३६ |
| ☐ जरठः | [ ८१–९० ] | ४१ |
| ☐ मुमूर्षुः | [ ९१–१०० ] | ४६ |

# मृत्कूटम्

[मानव - शतकम्]

शून्या पाषाणपट्टी युवतितनुकलां वन्यदूर्वाऽस्त्रलीलां
सिन्धुः स्वल्पान्धुभूयं क्षितिपतिपदवीं पादुका चापि दार्वी,
निन्ये तारेयकस्य प्लुतचरचरणो येन मेरोः प्रभारं
जायेतासौ वदान्यः शिशुजनवचने कच्छपीझङ्कृतिः सन् ।

जिन्होंने निर्जन में पड़ी हुई पाषाणशिला को युवती की कोमल कला दी, जंगली दूब को दिव्यास्त्र की लीला दी, समुद्र को कुएँ जैसा सुगम बनाया, काष्ठपादुका को सम्राट् की पदवी प्रदान की और अङ्गद के उछलते चरण को सुमेरु सा भारी बना दिया, वे आज भी उदारमना होकर नई पीढ़ी के स्वर में कच्छपी (वीणा) की झङ्कार बन जाएँ।

## ( १ )

### भ्रूणः

मृत्कूटात् स्यन्दमानादजनि जनिमतां नित्यधात्री धरित्री
श्वासानां रूपवीथी प्रचयमचकलन्नामलीलापवित्रम्,
आविर्भूतञ्च किञ्चित् स्वरितविलसितं श्लोकवल्मीकरूपात्
कृत्स्ना चैतन्यवाटी कृतकपरिचयैः कीलिता मृण्मयीव ।

माटी का आकार तरलित हुआ—हर जन्म लेने वाले की चिरन्तन धाय धरती बनी, साँसों के प्रत्यक्ष चित्र उभरे.... उन्हें कुछ नामों से विभिन्न कर्तव्यबोध मिले, कविता की दीमक बाँबी से रस-भरे स्वर फूटे और चेतना का सारा उपवन कृत्रिम परिचयवश अपने को माटी का पर्याय मानने लगा ।

## ( २ )

मृद् गौरी कुन्द-जाती-कुमुदसहचरी चारुगोधूमवर्णा
श्यामा दूर्वा-मृणाली-निचुलपरिचितापुष्यदिन्दीवराभा,
प्रत्यक्षं लक्ष्यचित्रा त्रिभुवनपटले सृष्टिविस्फारहेतुः
सेयं ब्राह्मी दृशां श्रीर्हरिगुणगणना शाम्भवी चाष्टमूर्तिः ।

माटी, उजली—कुन्द, चमेली, श्वेतकुमुद और सलोने गेहुँए रंग की; साँवली—दूर्वा, बिसलता, स्थलवेतसी और नीलकमल जैसी; उस आकर्षण का मूल हेतु है जिससे सृष्टि प्रगतिशील रहती है । इन्हीं में ब्रह्मा की उम्मीदभरी आँखों, विष्णु के आठ गुणों और शङ्कर की अष्टमूर्तियों का खुला चित्र दिखाई पड़ता है ।

( ३ )

कान्तो द्वे पुण्यतीर्थं जगति जनयतो निम्नगीभूय नित्यं
यत्रोत्तुङ्गे वटद्रौ विहरति कतिधाऽङ्गुष्ठपायी मुकुन्दः,
मृद्रेखे द्वे च बिन्दुं कमपि रचयतः स्वस्तिकीभूय भूम्ना
यत्रान्तर्लीनलोको लवलुलितवपुः कोऽपि जार्गात्त जोषम् ।

दो ज्योतियाँ नदी बनकर नीचे फिसलीं तो एक पावन तीर्थ बनता है—जिसके आँगन में उभरता है ऊँचा बरगद और उस पर कितनी बार पैर का अँगूठा पीते हुए विष्णु खेलने लगते हैं। दो रेखाएँ अगर स्वस्तिक सी मिलीं, तो बीच में एक नए बिन्दु का निर्माण होता है—जिसके लघु आकार में समूचे ब्रह्माण्ड की सिहरन चुपचाप जाग उठती है।

( ४ )

अव्यक्तो व्यज्यमानः स्वरयति मुरलीं रोदसीगह्वरेऽस्मिन्
श्रोत्रद्वारे विपञ्चीमुरसि निनदितं तिक्ततालं मृदङ्गम्,
मध्ये ढक्कां रसन्तीं शिथिलितचरणे झल्लरीमुल्लसन्तीं
माने सीत्कारवर्षं मनसि रतिपतेश्चापटङ्कारहर्षम् ।

अव्यक्त जब जब व्यक्त होने के पूर्वाभास पाता है, छेड़ देता है—धरती और अन्तरिक्ष के बीच कोई मीठी मुरली की तान, कानों में वीणा का सरगम, वक्ष में थपकते मृदङ्ग, शरीर-मध्य में मुखरित ढोल, ढीले पैरों में खनकता मंजीरा, मान में द्रवित सीत्कार और मन में काम-धनुष का एक उमंग-भरी टङ्कार।

( ५ )

चित्राश्लेषे शशाङ्कः क्षितिजपरिचये कश्चनाङ्गारकोऽयं
सौम्यस्पन्दे बुधश्रीः श्वसितगुणनिकाचुञ्चुतायां गुरुश्च,
शुक्रो ज्यायान् कवित्वे शनिरपि बलवान् धीरसञ्चारितायां
भानू रागप्रसारे जयति युतिपरो राहुकेतुग्रहात्मा ।

यह विम्ब ग्रहण (चित्रा से मिलन) में चन्द्रमा, क्षितिज (पर्याय) से पहचान बनाने में मंगल, सरल (नाम) स्पन्दन में बुध और श्वासों का गुणनफल निकालने में वृहस्पति होता है। कवित्व की सूझ में शुक्र, ठिठक कर चलने में बलिष्ठ शनि, राग रंग बघारने में सूर्य और (सहयोगी अणु से) जुड़ता हुआ राहु-केतु ग्रह बन जाता है।

( ६ )

ॐकारः श्रौतकल्पे मनसि तरलितो नूतनस्वप्नलोकः
शेफाली - फुल्लवृन्ते भ्रमर इव नवः कोकिलो वा रसाले,
हंसः कासारतीरे क्षितिजपरिसरे सस्मितो वा विवस्वान्
कोऽयं चैतन्यभूयं कलयति तरसा कोऽपि न ज्ञातुमीष्टे ।

कोई नहीं समझ पाता कि वैदिक पूजा के ॐकार, मन में तिर आए अदृष्ट स्वप्नलोक, शेफाली के विकसित वृन्त पर ठिठके भौंरे, रसाल शाखा में प्रमुदित कोयल, तडागतीर पर उतरे हंस या क्षितिज परिसर पर मुस्कराते सूर्य जैसा यह कौन है, जो अपना एक रिश्ता परब्रह्म से भी रखता है।

( ७ )

मीनो नीरप्रचारी निचुलितकमठः कम्रघोणो वराहः
कालेनाविद्धरोमा नरहरिरपरो विग्रही वामनश्च,
मातुः पीडाप्रदायी परशुनखधरः प्रीणनो रामभद्रः
कृष्णो दामोदरश्चैरयमिह सुगतः कल्किरेको विभाति ।

यह अकेला ही दस अवतारों का बाना अपनाता है—पानी में तिरता मीन, खोल में दुबका कछुआ, भड़कीली नासिका वाला शूकर, रोम-राजियों से युक्त नरसिंह, एक बौना आदमी, उपजते नाखूनों से माँ के लिए कष्टदायी परशुराम, उसके अन्तर्मन में हुलास भरने वाला राम, पेट में रस्सियों से जकड़ा बढ़ता आ रहा कृष्ण, सर्वज्ञ बुद्ध और (शस्त्रपाणि) साक्षात् कल्कि ।

( ८ )

कामं सप्तच्छदान्तः प्रवलितगुरुणा गर्भजालेन बद्धो
भ्रूणः सन्नेष तूर्णं भुवनपरिसर-स्पन्दितं बुध्यमानः,
पूर्वं क्षीराज्यदध्नां विविधमधुमयप्राशनानां ममत्वं
हित्वाऽभिज्ञानहेतोरभिलषतितरां मृत्तिकाऽऽमोदमेव ।

सात परत के गर्भजाल में भली भाँति बँधकर भी, भ्रूण तो सारी धरती को एक एक धड़कन पहचानता रहता है । दूध, घी, दही आदि मीठे व्यञ्जनों का स्वाद मिले, इसके पहले ही मौलिक पहचान सहेजने के लिए वह माटी की एक सोंधी महक के लिए लालायित हो उठता है ।

( ९ )

पुण्ये पीयूषकोषे सगुण - सरणिका - पूर्वरङ्गायमाणे
निर्लेपः कोऽपि मातुर्निवसति जठरे रत्नमासान् प्रतीतः,
साऽस्मै वात्सल्यधन्या श्वसिति विहरति स्वापमाप्नोति भुङ्क्ते
मायेवाच्छाद्य सर्वं चितिमयपटलं प्रत्यहं चीयमाना ।

सगुण लीला की प्रारंभिक कार्यशाला और पावन अमृतकोष जैसे माँ के पेट में कोई निर्गुण सत्त्व आकर बड़े भरोसे से नौ महीने रहता है । वह अपने वात्सल्य से कृतार्थ हुई इसके लिए ही साँसें लेती, खेलती, सोती, अनुकूल भोजन करती और माया की तरह चैतन्य पटल को ढँके हुई प्रतिदिन स्वयं बढ़ती रहती है ।

( १० )

यन्नाधीते स पश्चान्नवति - गतिमय - स्फीतसंवत्सरेषु
न्युब्जाकारो नवाङ्कैः पठति तदविदा डिम्बको गर्भमासैः,
काव्यालापं दुरापं ग्रहगणगणितं ब्रह्मविद्यां शिवोद्यां
चक्रव्यूहप्रयोगं प्रचुरजनमतप्राप्तियोगं तथैव ।

बाद के गतिशील और बहुआयामी नब्बे वर्षों में यह जो बातें कदाचित् नहीं सीख पाता उन्हें गर्भस्थ डिम्ब अपनी औंधी मुखमुद्रा में नौ मासों में ही अच्छी तरह पढ़ लेता है—कवित्वमय दुर्लभ वार्ताशैली, नक्षत्रों का गणित, शङ्कर द्वारा उपदिष्ट ब्रह्मविद्या, प्रायोगिक चक्रव्यूह और लोकप्रियता अर्जित करने की विधियाँ ।

## ( ११ )

### शिशुः

दुग्धाब्धिः कृत्स्नगेहे विलुलितमधुरा दुग्धधारा मुखाब्जे
मुग्धाभिर्गीयमानं स्वरगृहमभितो मञ्जुलं दुग्धगन्धि,
दन्तालो दुग्धमुग्धा कलितकिलकिला दुग्धसौख्यानि दुग्धे
मृत्कूटे दुग्धरागं भजति वसुमती स्नाप्यते दुग्धपूरैः ।

माटी का पुतला जब पहली वार दूध चाहता है, सारे घर में छलक पड़ता है दूध का सागर, मुँह में बरबस टपकती दूध की धार, नवेलियों द्वारा गाई जाती सोहर में दूधिया गमक, दूध की नन्हीं दँतुलियाँ और दूध की साध जैसी लुभावनी किलकारियाँ । लगता है सारी धरती दूध के फव्वारों से नहा उठी हो ।

## ( १२ )

देवः क्षीराम्बुधीनां दिशि दिशि विततं सान्द्रफेनं विचिन्वन्
मन्ये वात्सल्यपात्रं रचयति पृथुकं सौरभोद्भिन्नगात्रम्,
धन्यो ना तस्य लोभात् परिचितनिजतालाघवं लङ्घमानः
प्रीत्याऽमुं पाणिपात्रे रमयति सुचिरं चारुचुम्बाविनोदैः ।

संभवतः क्षीरसागर के देवता ब्रह्मा जी वहीं की ताजी मलाई एकत्र कर सदृश सुवास के कारण सबका दुलार पाने वाले इस शिशु का निर्माण करते हैं, जिसके लोभ से पहचान और अपनेपन के विना ही लोग किसी भी शिशु को बड़े स्नेह से हाथों पर लिटाकर दुलारते और चूमते हुए अपने को धन्य मानते हैं ।

( १३ )

बिभ्राणोऽरालकेशानलिकसरसिजे स्निग्धरोलम्बकल्पान्
स्वल्पे गात्रे मृणालीसदृशविलुलिते मार्दवं शैवलस्य,
क्रीडारम्भेषु सद्यश्चलकरचरणोऽयं ललाटूलबालः
सार्द्धं वक्त्रेण दृग्भ्यां हसति शकलयन् बालसूर्यस्य तेजः ।

उभरे लिलार वाला शिशु कमल-पुष्प जैसे लुभावने मस्तक पर गीले भौंरो की तरह घुंघराले केश और मृणाल सरीखे अंगों में सेंवार की कोमलता रखता हुआ, खेल के प्रारंभ में तेजी से हाथ पैर चलाकर जब चितवन और होठों में मुस्कराता है तो मानों (क्षितिज पर उगे हुए) बालसूर्य की उजास के टुकड़े कर के रख देता है ।

( १४ )

मायूरी चन्द्रिकेयं प्रथमशबलिता रङ्कुरेखा नु चान्द्री
साकूतं टङ्किता वा सकरुणजननी-नेत्रयोः काऽपि तारा,
दृक् सेयं किं तृतीया मदनमदहरा दृश्यमाना पुरस्ता-
दित्थं लोको ललाटे कलयति च शिशोः कज्जलावर्त्तलेखाम् ।

यह पहले पहल चितकबरा होता हुआ मोरपंख है या चन्द्रमा में हिरन की उभरती तस्वीर है ? जानबूझ कर टाँकी गई माँ की दुलार भरी आँख की पुतली है या वही तीसरा नेत्र दिखलाई पड़ रहा है, जिसने कामदेव का गर्व चूर किया था ? बच्चे के ललाट पर लगी हुई काजल की बिंदी को देख कर लोग इस तरह के गुनतारे में डूब जाते हैं ।

( १५ )

मात्रा वाङ्नेत्रमैत्री सहजपरिचितो मातृवात्सल्यगन्धः
संलापो मातृभाषा-प्रचलितवचनच्छायया कत्रकाकुः,
मात्रङ्के स्तन्यपानं कपिकुलकलया सर्पणं मातृभूमौ
विश्वं मातुः स्वरूपे भवति परिणतं गर्भरूपाय तस्मै ।

माँ से बतियाने और टुकुर टुकुर निहारने की लगन, अपने आप चीन्ही गई उसकी दुलार-सुगन्ध, बोलने में मातृभाषा के ही आरोह-अवरोह, माँ की गोद में दूध पीना और मातृभूमि पर बंदर की तरह सरकना ...नन्हें बालक के लिए सारा विश्व ही माँ के स्वरूप में सिमट आता है ।

( १६ )

हिन्दोला बर्हदोला क्वणित-परिसरा किङ्किणीमालिकाभिः
पित्रोरुत्सङ्गबन्धः सततमुखरितो रोमवीणानुबन्धः,
आस्तीर्णा क्षेत्रकोणे कवक-तृणमये वाऽस्तु कन्था विशीर्णा
बालस्याङ्गुष्ठपाने छुरितमधुरिमा लक्ष्यते निर्विशेषः ।

घुँघरुओं से मुखरित मोरपंख की तरह डोलता पालना हो, माँ और पिता की घनी पुलकभरी गोद हो, चाहे सूखे कुकुरमुत्तों वाले खेत के कोने में पड़ी तार-तार गुदड़ी हो—अंगूठा पोते शिशु की मीठी मुस्कान में कोई अन्तर नहीं पड़ता ।

( १७ )

मत्पार्श्वे खेलसर्पो प्रवलय ललितं प्रीतकण्ठं स्वजेथाः
पर्यङ्कस्थः प्रकामं स्वरय मृदुकलं शब्दयुग्मं कथञ्चित्,
स्वीकर्त्तुं क्षीरधारां विवृणु च वदनं भुङ्क्ष्व किञ्चित् त्वराया-
मित्थं बालो जगत्यामतिथिरिव नवः केन नाराध्यते प्राक् ।

मचलते हुए पास आओ, कितने अच्छे लगते हो....गले तो लगो, फिर पलँग पर लेटे हुए धीरे से अपनी बातें कहो । पहले दूध पीने को तनिक मुँह खोलो और जल्दी से कुछ खा भी लो .......यूँ नए मेहमान की तरह दुनिया में नन्हें शिशु की कौन आवभगत नहीं करता ।

( १८ )

रम्याकारः कणोऽसौ कलम-कणिशतो बीजवज्जायमानः
क्षमागोलं शून्यदोलं रचयति पृथुकः सौरभास्वादलोलम्,
तं वृद्धा लालयन्तां न च सदृशचरं सोऽनुरागं विधत्ते
श्वेतच्छत्रेषु तेषु प्रसृमरजडतापिण्डितेष्वोदनेषु ।

शिशु के रूप में...धान की बाली से चटखता हुआ सुन्दर सा बीज, बेसहारा घूमती हुई धरती को अपनी सुगन्ध से आकृष्ट कर लेता है । उसे बूढ़े कितना भी दुलराएं, उन्हें सफेदी (फफूंदी) से आवृत बासी भात समझता हुआ वह बराबर अनुराग नहीं दे पाता ।

( १९ )

बालः सोऽयं स्वतन्त्रो विलसति शबलं स्वीयवेषं दधानः
स्निग्धो माधुर्यशाली नव इव तनुमान् काव्यबन्धो विधातुः,
विद्यायै बालखिल्यो भवति किमविदा संघवेषे निबद्धः
कण्ठे दोलायमानं दधदिव लघुकं नीलगोमायुपुच्छम् ।

बच्चा एकदम स्वच्छन्द, रंगविरंगे कपड़ों में ही अच्छा लगता हैं .. जैसे सलोना और मिठास भरा सृष्टिकर्ता का एक नवीन काव्यबन्ध मानवशरीर धारण कर सामने आ गया हो, फिर पढ़ाई के नाम पर उसे गणवेष में सीमित और गले में नीले शृगाल की सी पूँछ लटकाने को बाध्य (ब्रह्मा के रोम से उत्पन्न साठ हजार अँगूठे के आकार वाले) बालखिल्यों की श्रेणी में क्यों खड़ा कर दिया जाता है ?

( २० )

दृष्टिः संविद्धमात्रा स्वनयति न किमु स्नेहयात्राप्रसारं
विश्रब्धा मेघमाला विशदयति न किं भाविनीं शस्यलक्ष्मीम्,
सुस्निग्धः पल्लवाग्रः प्रथमविदलितो नाह किं वृक्षवृत्तिं
बालस्यारम्भिणी च प्रगतिकलरुचिः किन्न सर्वं व्यनक्ति ।

क्या चितवन मिलते ही स्नेहयात्रा का विस्तार नहीं कह देती, घहराती हुई बदलियाँ आगे की फसल का संकेत नहीं दे देतीं, पहली कोंपल से फूटा पत्ता पेड़ की प्रगति नहीं सूचित कर देता और बालक की प्रतिभा-सम्पन्न रुचि सारा भविष्य नहीं बतला देती ।

## ( २१ )

कं चित्रात्मप्रबन्धं न तरति तरसा छात्रमानी सतर्षं
काञ्च क्रीडां न काङ्क्षत्ययमनुभवितुं कौतुकाकृष्टचेताः,
किं किं नो कीर्ति-वित्तं तिरयति सहसा स्वीकृतस्वर्णमुद्रः
श्मश्रुच्छायाऽभिषेके स्मितमित-वयसि स्पृष्टकैशोरकेऽसौ ।

भिनते मसों की बौछार और मुस्कान से नहाई किशोरावस्था छू जाते ही विद्यार्थी बनने के स्वाभिमान से कितनी चित्रात्मक पुस्तकें यह एक बैठक में नहीं पढ़ डालता, नई उमंग लिए कितने खेल नहीं सीख लेता और किसी क्षेत्र में स्वर्णपदक पा गया तो इन कीर्ति-सम्पदाओं को भी ओछी नजर से देखने लगता है।

## ( २२ )

नायं बालो युवा वा विलसति नितरां न क्षुपो नापि वृक्षः
प्रोन्मीलन्नीलभृङ्ग-क्षुभितनिटिलकः केवलं कृष्णसारः,
शाखास्वासज्य शीर्षं निभृतखुरलिकामञ्जसा शिक्षमाणः
कान्तारे कीचकेभ्यः सततविलुलितां सेवते रागमैत्रीम् ।

न यह शिशु रहा....न युवक, न झाड़ी...न वृक्ष ही । यह तो उभरती नीली सींगों से बौखलाए लिलार वाला चितकबरा हिरन है....जहाँ तहाँ डालियों में सिर फँसाकर अकेले ही जूझता, वनवीथियों के छिद्रयुक्त बाँसों से पझरते स्वरों के सरगम पर कान लगाए रहता है ।

( २३ )

अस्य स्वापो दुरापो भवति पृथगहो स्वप्नसम्मोहनीभिः
स्यूताभिः सङ्कटाभिः सुरधनुरुदयत्सप्तवर्णच्छटाभिः,
तेन स्वीकृत्य विश्वम्भर-भरविसरं सन्धिकालप्रवृत्तिः
शेते सम्पातभीत्या निशि निशि वियतः सोऽयमुत्तानपादः ।

इसे वह नींद कहाँ मिले, जिसमें घने उलझे सपनों का सतरंगी इन्द्रधनुष न निकला हो—तभी तो अपने ऊपर समूची सृष्टि का भार कल्पित करके वयःसन्धि का राही रातों में आकाश टूट पड़ने के डर से घुटने उठाए हुए शयन करता है ।

( २४ )

निध्यायत्येष दृश्यं सपदि चिरतरं धीरमार्जारवृत्ती
रक्तोऽप्यास्ते च तूष्णीं बक इव पयसि न्यस्तनेत्रः किशोरः,
यद् वै कश्छद्मभोजी भयमभिनयते प्रोञ्छ्य पुच्छेन वक्त्रं
केयं निर्धूय शल्कं प्रसरति शफरी पल्वलाम्भः प्रलुब्धा ।

लुब्ध मन से पानी में चुपचाप आँखें पिरोए हुए बगुले और ठिठके बिलाव की तरह यह प्रत्येक दृश्य को देर तक निरखता रहता है....कि धोखे से माल चख कर, पूँछ से मुँह पोंछकर कौन भय का अभिनय करता है और कौन सी मछली डैने झाड़कर मटमैले पानी की ओर सरकी जा रही है ।

( २५ )

मञ्चाद् वाचाटकानां विचलति चपलो निह्नुते गीतगोष्ठ्याः
साकूतं केकराक्षः पठनपरवशो नेक्षते नाट्यवीथीम्,
मुद्रा शाकुन्तलेयी छलयति नियतिं कीदृशी शुक्रतीर्थे
तन्नूनं दूरदर्शी सपदि विविदिषत्येकतानः किशोरः ।

चपल मन किशोर प्रवचन के मंचों से विचलित होता है, गीत-गोष्ठियों में जाने से कतराता है और अध्ययन की व्यस्ततावश नाटिकाएँ भी तिरछी आँखें मिचमिचा कर नहीं देखता—एकचित्त होकर दूरदर्शन का वह दृश्य ही समझना चाहता है, जब शकुन्तला की मुद्रा शुक्रतीर्थ पर समूची नियति से छल करने लगती है।

( २६ )

आस्येनासौ नखास्यं शकलयति समं शान्तिभिर्देहलीना-
मुत्कीर्य क्षामकेशान् स्थिरयति नयनं सार्धमुत्कैर्गवाक्षैः,
गीतैरर्धप्रगीतैर्ज्वरयति निलयं प्रातिवेश्यैर्मनोभिः
कैशोरे कूर्चलेखां क्षुरति रतिवशात् साकमर्थेन पित्रोः ।

किशोर मुँह से कुतर डालता है, नाखूनों का सिरा और घर-दरवाजे की शान्ति। रूखे बाल बिखेर कर चपलताएँ करता है कि आँख और उत्कण्ठित खिड़कियों की टकटकी लगी रहे। आधे टेरे गए गीतों से अपना घर और पड़ोसियों के मन सुलगाए रहता है। शौकिया ही सही, दाढ़ी के साथ बड़ों की जेब भी साफ करना सीख जाता है।

( २७ )

उत्पन्नः सद्मकोणे स्रुतकलशिकया लालितः कन्दलोऽयं
सञ्जातः क्षीरवाही तदिति परिगतं प्रीतचुम्बैः कुटुम्बैः,
सम्प्रत्यानीलशाखो नवपरुरुदयत्कुड्मलास्वादसान्द्रै-
रेष ग्रामस्य शान्तिं चुलुकयतितरां खेचरीणां विरावैः ।

घर के कोने में उपजा और झज्झर सुराहियों से दुलराया गया पौधा.... दूधदार हो गया...ऐसा प्यार से चूमने वाले परिवारजन जान गए थे, पर अब तो अँकुराई नई कोपलें चखने को आकुल चिरैयों की चहचहाहट से यही सुरमई डाल वाला....बस्ती का सुख-चैन चुल्लू में भर कर पिये जा रहा है ।

( २८ )

को नाम श्रान्तिलेशः किमिव च शयनं गाहते मोघतन्द्रा
के व्यायाम-प्रयोगा अशनविनियमा वेति वेवेत्ति नायम्,
कूर्दन् क्रीडत्यजस्रं द्रुत इव विपिने तित्तिरिः क्ष्वेडशीलः
स्वैरं कीरप्रवृत्त्या फलमपि विरसं सर्वदा सास्वदीति ।

थकान की अनुभूति कैसी होती है, बिस्तर पर झपकियाँ कैसे ली जाती हैं, क्या होते हैं व्यायाम और भोजन के नियम....यह सब किशोर नहीं जानता । वह तो जंगल में चराए जा रहे तीतर की तरह चहकता उछल-कूद के खेल खेलता रहता है, जब जी चाहा कच्चे तथा सीठे फल भी तोते की तरह स्वाद से कुतर कुतर कर खा लेता है ।

( २९ )

स्वेदस्नातो विवर्णः क्षतरदवसनो व्यस्तपिण्डीरकेशः
कोऽयं गायत्यजस्रं स्वयमिव मुदिरो निर्जने बालभिल्लः,
घर्मस्पर्शानभिज्ञः श्वसितपुलकितो दंशितस्फूर्त्तशम्पः
स्वैरङ्गैर्मीनगर्भैः सपदि तरलयन् शस्यसम्पद्बलाकाः ।

पसीने में नहाया, बदरंग, फटे होंठ और मटमैले केशों वाला कौन भील बालक वीराने में अलाप छेड़ रहा है । यह धरती पर उतरा कोई बादल का टुकड़ा है... धूप से बेखबर, अपनी ही उसाँसों से रोमाञ्चित हो लेता है, दाँत भींचता है तो बिजली कौंध उठती है, अंगों में छिपाए है—मछलियों (उभरती मांसपेशियों) का बाँकापन और फसल रूपी बगुलियों को अकेले दम पर लहरा देता है ।

( ३० )

अध्येया शिल्परीतिः सरणिरुत कलासाधकानां निषेव्या
भैषज्यं भावनीयं नियुतनिधिमयी यान्त्रिकी वाऽऽविरस्तु,
शास्तिर्लोकस्य सेवा लसतु फलवती वाऽपि वाणिज्यवृत्तिः
सीदत्येवं चतुष्के कलयति च धृतिं केवलोऽयं किशोरः ।

दस्तकारी सीखें अथवा कला में विशेषज्ञता प्राप्त करें, चिकित्साशास्त्र में प्रवेश लें या करोड़ों की तिजोरी यान्त्रिकी पढ़ें, प्रशासन सेवा से लाभ मिलेगा अथवा व्यापार से ऐसे विकट चौराहे पर बिसूरता हुआ किशोर ही धीरज रख पाता है ।

( ३१ )

सोऽयं स्विद्यत्-कराग्रैरुपसरति रविः कम्प्रवानीरवाटीं
सद्यो वात्या वहन्ती स्थगनपरवशा जायते शस्यमूर्ध्नि,
कूटोत्पातः प्रपातो मसृणयति मुहुः सैकतोद्भिन्नतीर्थं
तन्मन्ये दुर्ललन्ती तरुणिमकलना स्पन्दते लोभनीया।

काँपते बेंतों के झुरमुट पर पसीने से चुभचुभाई किरणों (हथेलियों) वाला सूरज उतरने लगा, फैलती आँधी अचानक फसल की नोक पर टिक गई और शिखर से फिसलता झरना वालुका तट के अन्तराल बुहारने लगा....लगता है सपनीला और नटखट यौवन कहीं निकट से ही दस्तक दे रहा है।

( ३२ )

व्याली व्यालीढगात्री दशति शिलरदा चेदिमं वेदिलग्ना
दुर्लक्षैः श्लेषचित्रैः परिचयपृथुला कृत्तविज्ञानमूर्तिः,
एतस्या दंशलेशं सकृदपि तरुणः प्राप्य विभ्रान्तचेताः
कश्चिद् वैद्यं विषाणां रहसि मृगयते व्यालिकां कोऽपि भूयः।

अबूझी संश्लिष्ट पहचान से आज की जानकारियाँ तोड़ देने वाली, वेदी पर कुण्डली मारे बैठी कोई नागिन बदन चाटकर पैने दाँत चुभो देती है—तो एक दंश से उन्माद का अनुभव करता हुआ कोई तरुण एकान्त में ओझा तलाशने लगता है तो कोई फिर से उसी नागिन को।

( ३३ )

कूजन्तं काननान्तं मदिरयतितरां मञ्जरी मञ्जुलाऽऽम्री
नैदाघी वातवृष्टी रसयति सुरभिं स्तोकसञ्चारधीरा,
हैमन्ती तूलशय्या कलयति पुलकश्लोकनं रागपूर्वं
मध्यावस्था च सेयं प्रथमसमुदिता मोहनं वेवयीति ।

चहकते वन को प्रथम विकसित आम्रमंजरी उन्मत्त बना देती है, तपिश की फुहार थम कर वातावरण में सोंधापन भर देती है, हेमन्ती रुईदार सेज रोमाञ्चित मनावन करती है और नई युवावस्था (तन-मन में) वशीकरण का जाल सा बुन देती है ।

( ३४ )

नेत्रद्वन्द्वे कुरङ्गः शिरसि कलभको जल्पितेऽयं कलापी
पञ्चास्यः प्रोन्नतांसे स्फिचि वरजघने स्फायमानोऽथ खड्गी,
दोष्णोः किञ्च प्रपातप्रगुणितलहरी राजते निर्झरिण्या
यूनो गात्रच्छलेन प्रविशति नगरीं जङ्गमा जङ्गलश्रीः ।

यह दोनों आँखों से हिरन, सिर से हाथी का बच्चा, बोली से मोर, ऊँचे कन्धों से शेर और कूल्हे से गैंडा लगता है । इसकी बाहों से नदी के दो झरने बिछल रहे हैं—युवक के गठीले बदन का बहाना लिए मानों जङ्गल शहर में घुसा चला आ रहा है ।

( ३५ )

कह्लारद्वन्द्वलीला किसलययुगली सेयमेलालतायाः
कम्प्रा कुद्दालशाखा मदिररयभरा माधवी मारुतश्रीः,
अन्तर्वह्निः कुशोर्वी प्रथमजललवैः सौरभं स्त्यायमानं
संक्रान्ते फाल्गुनेऽमी स्वत इव मुखराः सायकाः षड् भवन्ति ।

दो सिहरते कमल, इलायची के जुड़वाँ पत्ते, कचनार की लचकीली डाली, माधवी लता से छनती उन्मन हवाएँ, भीतर से सुलगती कुसैली धरती और पहले पानी से फैलता भीनापन ...फागुन लगते ही ये छः प्रकृति रेखाएँ अपने आप तीर सी वेग-वाचाल हो जाती हैं ।

( ३६ )

पद्मप्रख्ये तदीये क्षणविनिमयतः सञ्चरन्मीनसख्ये
माद्यन्मातङ्गखर्वे बक-परिणिहिते गृध्रसंकाशगर्वे,
पर्यायात् खञ्जनाभे पृषतशिशुनिभे सैरिभाभे वृकाभे
किं नेत्रे नेन्द्रजालं सपदि कलयतः पक्ष्म-वेतालमित्रे ।

बरौनियों के बेताल से मिली भगत करके आँखें क्या-क्या इंद्रजाल नहीं करतीं ...कभी कमल बन जाती हैं, कभी बलखाती मछलियाँ, अगले क्षण मतवाले मातंग की आँखों जैसी चौंधी, बगुले की तरह एकाग्र और गीध सी गर्वीली दिखने लगती हैं, सीधे देखती हुई खंजन और पलट कर निहारती हुई चितकबरे हिरन, भैंसे और भेड़िए की भी प्रविधियाँ अपना लेती हैं ।

